नमो नमः, रथस्य ॥ कण्टकोच्छिष्टपाषाणवृश्चिकादिनिवारणे । पादुके सम्प्रदास्यामि विप्र प्रीत्या प्रगृह्यताम्, पादुकयोः ॥ उपानहौ प्रदास्यामि कण्टकादिनिवारणे । सर्वस्थानेषु सुखदावतः शान्ति प्रयच्छ मे, उपानहोः ॥ इहामुत्रातपत्राणं कुरु केशव मे प्रभो । छत्रं त्वत्प्रीतये दत्तं ब्राह्मणाय मया शुभम्, छत्रस्य ॥ कमण्डलुर्जलैः पूर्णः स्वर्णगर्भः सुलक्षणः । अर्पितस्ते महासेन प्रसन्नस्तेन मे भव, कमण्डलुनः ॥ शशाङ्ककरसङ्काश हिमडिण्डीरपाण्डुर । प्रोत्सारयाशु दुरितं चामराऽमरवल्लभ, चामरस्य ॥ पत्रिका सर्वजन्तूनां शैत्यानन्दकरी शुभा । पितॄणां तृप्तिदा नित्यमतः शान्ति प्रयच्छ मे, व्यजनस्य ॥ दर्शनेन त्वमादर्श नृणां मङ्गलदायकः । शौर्यसौभाग्यसत्कीर्त्तिनिर्मलज्ञानदो भव, दर्पणस्य ॥ भगवन् शूलहस्तेश दक्षाध्वरविनाशन । तवायुधप्रदानेन शूलं नश्यतु मे सदा, शूलस्य ॥ सर्वग्रहर्क्षतारेश सर्वेशस्त्वं हि भास्कर । संक्रान्तिशूलदोषं मे निवारय दिवाकर, संक्रान्तिशूलस्य ॥ त्वं देवानां मनुष्याणां रक्षसामायुधावसि । तस्मादेषां प्रदानेन शान्तिर्भवतु सर्वदा, आयुधस्य ॥ सोमोद्भवानि दारूणि जातवेदःप्रियाणि च । तस्मादेषां प्रदानेन श्रियं देहि विभावसो, काष्ठानाम् ॥ शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् । सुवेषधारि त्वं यस्माद्वासः शान्ति प्रयच्छ मे, वस्त्रस्य ॥ रक्तवस्त्रयुगं यस्मादादित्यस्य प्रियं सदा । प्रदानादस्य मे सूर्य अतः शान्ति प्रयच्छ मे, रक्तवस्त्रयुग्मस्य ॥ धर्मराजेन विधृतं कृष्णवस्त्रं सुशोभनम् । सर्वक्लेशविनाशाय कृष्णवस्त्रं ददाम्यहम्, कृष्णवस्त्रस्य ॥ और्णपट्टमनुष्येयं स्वर्णबीजं तव प्रभो । दत्तं गृहाण देवेश पापं संहर सत्वरम्, और्णपट्टस्य ॥ और्णमेषसमुत्पन्ना शीतवातभयाऽपहा । यस्मात्तुषारहारी स्यादतः शान्ति प्रयच्छ मे, ऊर्णायाः ॥ ब्रह्म-

सूत्रं महादिव्यं मया यत्नेन निर्मितम् । ब्राह्मं तन्मेऽस्तु मे देव ब्रह्मसूत्रप्रदानतः,उपवीतस्य । अष्टाविंशतिसंख्याकै रुद्राक्षैर्योजिता मया । अर्पिता तव हस्ते च गृहाण सुरसैन्यप, अक्षमालायाः ॥ सर्वविद्याश्रयं ज्ञानकरणं ललिताक्षरम् । पुस्तकं सम्प्रयच्छामि प्रिया भवति भारती, पुस्तकस्य ॥ कर्पूरः कदलीभूतो देवदेव-प्रियः सदा । भाग्योत्तमो नृपाणां च तद्दानात् सुखमस्तु मे, कर्पूरस्य ॥ जटामांस्युद्भवां देवीमेणनाभिसमुद्भवाम् । भक्त्याहं सम्प्रदास्यामि मम सन्तु मनोरथाः, गन्धद्रव्यस्य ॥ नन्दनावास मन्दारसखे वृन्दारकार्चित । चन्दन त्वत्प्रसादान्मे सान्द्रानन्दप्रदो भव, चन्दनस्य । श्रीखण्डागरुकर्पूरकस्तूरीकुङ्कुमान्वितम्॥ विलेपनं प्रयच्छामि सौख्यमस्तु सदा मम, चन्दनाद्यनुलेपनस्य ॥ समस्तेभ्यो-ऽपि वस्तुभ्यः संस्तुताऽसि सुरासुरैः।विन्यस्ताङ्गेषु कस्तूरी सुखदा-ऽस्तु सदा मम, कस्तूर्याः॥कन्दर्पदर्पदं यस्मात् कर्पूरं प्राणतर्पण-म् ॥ अहर्पतिभवस्तापस्त्वद्दानादपसर्पतु, कर्पूरस्य ॥ यदभूदङ्ग-संलग्नं कुङ्कुमादिविलेपनम् । जलक्रीडासु गोपीनां द्वारवत्यां जलार्पितम् ॥ गोपीचन्दनमित्युक्तं मुनीन्द्रैः कल्मषापहम् । तस्मा-दस्य प्रदानेन विष्णुर्दिशतु वाञ्छितम् ॥ गोपीचन्दनस्य ॥ मणि-काञ्चनपुष्पाणि मणिमुक्तामयानि च । तुलसीपत्रदानस्य कलां नार्हन्ति षोडशीम् ॥ तुलसीपत्रदानाद्वा ब्रह्मणः कायसम्भवम् । पापं प्रशममायातु सर्वे सन्तु मरोरथाः, तुलस्याः ॥ ह्लादयन्ति मनो यस्मात्तस्मात् सुमनसः स्मृताः । दत्ता ददत मे नित्यमत्या-ह्लादं सतीं श्रियम्, पुष्पस्य ॥ इदं फलं मया विप्र प्रभूतं पुरत-स्तव । तेन मे सफलाऽवाप्तिर्भवेज्जन्मनि जन्मनि, फलस्य ॥
ब्रह्महत्यादिपापघ्नं ब्रह्मणा निर्मितं पुरा।कूष्माण्डं बहुबीजाढ्यमतः शान्तिं प्रयच्छ मे, कूष्माण्डस्य ॥ताम्बूलं श्रीकरं भद्रं ब्रह्मविष्णु-

शिवात्मकम् । अस्य प्रदानाद् ब्रह्माद्याः शिवं ददतु पुष्कलम् । ताम्बूलस्य ॥ पूरितं पूगपूगेन नागवल्लीदलान्वितम् । चूर्णेन चूर्णपात्रेण कर्पूरपिटकेन च ॥ सपूगखण्डनं दिव्यं गन्धर्वाप्सरसां प्रियम् । करक त्वं निरातङ्कं त्वत्प्रसादात् कुरुष्व माम्, ताम्बूलकरण्डस्य ॥ लक्ष्मीप्रिया च लक्ष्मीदा लक्ष्मी च वसनप्रिया । सौभाग्यकृद्वरस्त्रीणां हरिद्रा श्रीप्रदाऽस्तु मे,हरिद्रायाः॥जरा नो जायते यस्मान्मण्डनं शुभकर्मसु । तस्माज्जीरकदानेन प्रीयतां गिरिजा मम, जीरकस्य ॥ कञ्चुकीवस्त्रयुग्मैश्च तथा कर्णावतंसकैः । कण्ठसूत्रैश्च भूषाभिः प्रीयतां निमिनन्दिनी, सौभाग्यद्रव्ययुक्तशूर्पस्य ॥ रामपत्नि महाभागे पुण्यमूर्त्ति निरामये । गृहाणेमानि शूर्पाणि मया दत्तानि जानकि, शूर्पस्य ॥ नवग्रहदक्षिणादानमन्त्रा मात्स्ये। कपिले सर्वभूतानां पूजनीयाऽसि रोहिणि । सर्वतीर्थमयी यस्मादतः शान्तिं प्रयच्छ मे इति ॥

इति श्रीजगद्गुरुभट्टनारायणसूरिसूनुपण्डितशिरोरत्न-
मीमांसकशङ्करभट्टात्मजभट्टनीलकण्ठकृते
भगवन्तभास्करे दानमयूखः
षष्ठः ६ संपूर्णः ॥

शुभमस्तु ॥